तेषु तेषु च दानानां व्रतानां जपहोमयोः ।
श्रुतिस्मृतिपुराणेषु विविधं श्रूयते फलम् ॥ २१

तत्सर्वं युगपत्प्राप्तं य इच्छेन्मुनिसत्तम! ।
समार्गशीर्षद्वादश्यां शुक्लायां नियतात्मकः ॥ २२

वेङ्कटाद्रौ महापुण्ये स्वामिपुष्करिणीतटे ।
कुर्यादेकतमं दानं विप्राय श्रुतशालिने ॥ २३

विष्णुभक्ताय शान्ताय दरिद्रायाऽनसूयवे ।
तेन सर्वेषु तीर्थेषु तद्दत्तं नात्र संशयः ॥ २४

यानि षोडश दानानि महान्त्याहुर्मुनीश्वराः ।
तेषामेकं तु यः कुर्यात् स्वामिपुष्करिणीतटे ॥ २५

मार्गशीर्षे सिते पक्षे द्वादश्यां विजितेन्द्रियः ।
तेन षोडश दानानि तीर्थेषु सकलेष्वपि ।
मार्कण्डेय! कृतानि स्युः युगपत्तत् महाद्भुतम् ॥ २६

"धनुर्मासे सिते पक्षे द्वादश्यामरुणोदये ।
आयान्ति सर्वतीर्थानि स्वामिपुष्करिणीजले" ॥ २७

इमं मंत्रं समुच्चार्य स्नातस्तत्फलमाप्नुयात् ।
एतद् गुह्यं पुरा विष्णुः प्रोवाच भगवान् मम ' ॥ २८

शतानन्दः—

इत्युक्त्वाऽन्तर्दधे ब्रह्मा मार्कण्डेयस्य पश्यतः ।
मार्कण्डेयस्तु नृपते! विस्मयाविष्टमानसः ॥ २९

नारायणगिरिं प्रायात् तथैव प्रीतमानसः ।
गत्वा तस्मिन्गिरौ पुण्ये स्वामिपुष्करिणीं शुभाम् ॥ ३०

दृष्ट्वा स्नात्वाऽथ तस्या वै विपुले विमले जले ।
तस्यास्तीरे महीपाल! भगवन्तं जनार्दनम् ॥ ३१

समभ्यर्च्य हृषीकेशं प्रसन्नेनान्तरात्मना ।
वत्सराणां त्रयं राजन्! उवास स महीधरे ॥ ३२

प्रतिवर्षञ्च तीर्थानामागमं प्रेक्ष्य तत्तिथौ ।
मार्कण्डेयो महीपाल! प्रसादात् शार्ङ्गधन्वनः
अवाप परमानन्दं अनन्तं शाश्वतं मुनिः ॥ ३३

वामदेवः—

'य इदं श्रावयेन्नित्यं स्वामितीर्थस्य वैभवम् ।
शृणोति परया भक्त्या द्वादश्यां मार्गशीर्षके ॥ ३४

तस्य प्रसन्नो भगवान् सर्वमिष्टं प्रयच्छति ।
एकादश्यामुपोष्यास्मिन् पर्वते वेङ्कटाह्वये ॥ ३५

द्वादश्यां मार्गशीर्षे तु पूर्वपक्षे च ये नराः ।
स्नानं कृत्वा यथान्यायं स्वामितीर्थे समागताः । ३६

प्रणमन्ति जगन्नाथं तत्तीरतलवासिनम् ।
ते नरास्तत्प्रसादेन पापराशिं विधूय वै ।
तत्प्रयान्ति परं धाम शाश्वतं ब्रह्मसंज्ञितम् ॥ ३७

## स्वामिपुष्करिणीतीर्थस्नानार्थं श्रीवेङ्कटाचलं प्रति जनकनृपागमनम्

शास्त्राणां परमो वेदो देवानां परमो हरिः ।
तीर्थानां परमं तीर्थं स्वामिपुष्करिणी नृप! ॥ ३८

तस्मात्त्वमपि राजेन्द्र! गत्वा नारायणचलम् ।
स्वामिपुष्करिणीतोये स्नात्वा नियतमानसः ॥ ३९

तत्तीरवासिनं देवं शरण्यं सर्वदेहिनाम् ।
नारायणं समाराध्य सर्वान् कामानवाप्स्यसि' ॥ ४०

श्रीवेदव्यासः —

एतच्छ्रुत्वा तु जनकः शतानन्दोदितं तदा ।
प्रहर्षमतुलं लब्ध्वा मन्त्रिभिः सहितो नृपः ॥ ४१

गत्वा वृषाचलं तीव्रं स्वामिपुष्करिणीजले ।
स्नात्वा दृष्ट्वाऽथ देवेशं श्रीभूमिसहितं ततः ॥ ४२

तत्र स्थित्वा चिरं कालं सर्वान् कामानवाप्य च ।
आगत्य मिथिलां राजा शशास पृथिवीमिमाम् ॥ ४३

इति श्रीवामनपुराणे क्षेत्रकाण्डे श्रीवेङ्कटाचलमाहात्म्ये स्वामिपुष्करिणीं प्रति सार्धत्रिकोटितीर्थागमन - तत्कालकृतदानफलादिवर्णनं नाम चतुश्चत्वारिंशोऽध्यायः ।

---

इत्थं श्रीवामनपुराणे विंशप्रभृतिचतुश्चत्वारिंशपर्यन्तं पञ्चविंश-अध्यायात्मकः श्रीवेङ्कटाचलमाहात्म्य परोभागः समाप्तिमगमत् ।

---

श्रीवेङ्कटाद्रिनिलयः कमलाकामुकः पुमान् ।
अभङ्गुरविभूतिर्नः तरङ्गयतु मङ्गलम् ॥



इत्थं श्रीवामनपुराणे
त्रिंशप्रभृति चतुश्चत्वा-
रिंशपर्यन्तं
पञ्चदिश अध्यायात्मकः
श्रीवेङ्कटाचल माहात्म्यपरो
भागः समाप्तिमगमत्